ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

३८ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१३ ई०

प्रधानसम्पादकः
**प्रो० भवेन्द्रझा**
कुलपतिः

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**

सहसम्पादकः
**डॉ० ज्ञानधरपाठकः**



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३८ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१३ ई०



मुद्रकः
**अमरप्रिंटिंगप्रैसः**
दिल्ली
amarprintingpress@gmail.com

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# पुरोवाक्

अध्यात्मपरायणा त्यागमूला समन्वयात्मिका सहिष्णुतासंयुता भारतीयसंस्कृतिः विश्वस्मिन् विश्वे अनुपमा वर्तते। 'वसुधैव कुटुम्बकम्', 'यत्र विश्वं भवत्येकनीडम्', 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे', संगच्छध्वं संवदध्वम्--''सर्वे भवन्तु सुखिनः'' इत्यादिवाक्यख्यापिताया: विश्वबन्धुत्वभावनाया: परिकल्पना अस्या: सर्वातिशायि महत्त्वं द्योतयति। सम्प्रति सर्वे देशा भूमण्डलीकरणाय प्रयतन्ते। विविधराष्ट्रेषु ऐक्यं विचारसाम्यं सहभागित्वं समन्वयं सहिष्णुतां पारस्परिकसद्भाववृत्तिञ्च प्रतिष्ठापयितुं प्रयासो विधीयते।

संसारेऽस्मिन् विलसन्ति स्वाभिप्रायाभिव्यक्तिसाधनभूता विभिन्नाभाषा:। तासु भाषासु संस्कृतभाषा सर्वोपरि वर्तते। केचन विदेशीया विद्वांसः इयं मृतभाषा इतिप्रचारमकुर्वन्। इयं भाषा न कदापि व्यवहारभाषा आसीदिति तेषां मतम्। परं यदि वयं प्राचीनसंस्कृतव्याकरणसाहित्यादिशास्त्रग्रन्थान् सम्यगवलोकयामः तदा अस्माभिरिदं स्पष्टतयाऽवगम्यते यदियं भाषा व्यवहारभाषा आसीदिति। भगवता पाणिनिना स्वीयाष्टाध्याय्यां च्छन्दसि, भाषायाम् इति विभागं कृत्वैव शब्दानामन्वाख्यानमक्रियत। अत्र भाषा नाम लौकिकी भाषा एवं या लौकिकी भाषा सैव व्यावहारिकी भाषा इत्यर्थ:। भगवता पतञ्जलिना विरचितमहाभाष्यादपि स्पष्टं प्रतीयते यत् संस्कृतं भाषितभाषा आसीदिति।

परकीयशासनवशात् जीवन्त्या: अपि अस्या: देववाण्या: अभिवृद्धिकार्यं किञ्चित् कुण्ठितमासीत्। अस्या: भाषाया: अभिवृध्यै स्वातन्त्र्योत्तरभारते सर्वकारेण स्वयंसेवासंस्थाभिश्च नैके कार्यक्रमा: समायोजिता: सन्ति। अद्यावधि यावद्धनं व्ययीकृतं सर्वकारेण यावान् प्रयत्नः विहितः स्वयंसेवासंस्थाभिः तावदभिवृद्धि: संस्कृतस्य न संजाता इति चेखिद्यते न श्चेत:।

संस्कृते न केवलं काव्यसाहित्यविषयका: ग्रन्था: सन्ति। परं ज्योतिषशास्त्र-पाकशास्त्र-अर्थशास्त्र-राजनीतिशास्त्रादिविषयका: ग्रन्था अपि सन्ति। एवमेव भौतिकविज्ञान-रसायनविज्ञान-वैद्यकविज्ञान-खगोलविज्ञान-भूविज्ञान-धातुरसायन-विज्ञान-विषयका: ग्रन्था: सन्ति। तेषां विषये विद्यापीठे अनुसन्धानम् भवेत्। एवमेव तादृशग्रन्थानां प्रकाशनार्थमपि विद्यापीठे व्यवस्था भवेत् तादृश: प्रयत्नो विधीयते।

शोधप्रभाया: प्रकाशनसदुद्यमे अनुत्तमं कौशलं प्रकटीकृतवन्त: शोधप्रभासम्पादका: आचार्यरमेशकुमारपाण्डेया: समं च सर्वेऽस्या अनुसन्धातारो लेखका: साधुवादपात्रं सन्ति। इतश्च भूयोऽपि समुज्ज्वलं शास्त्रादिचिन्तनप्रभा शोधप्रभा प्रकटीकरिष्यतीत्याशासे।

**प्रो. भवेन्द्रझा**
कुलपतिः (प्रभारी)

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

शोधशब्दस्य कृते अनुसन्धानशब्दस्यापि प्रयोगः विधीयते। अयं प्रश्नः जागर्ति, यत् शोधो नाम किम्? तदा विचार्यते -- नवीनतथ्यानामुद्घाटनम् अथवा पूर्वत एव अवगतानां तथ्यानां नवीनप्रणाल्या प्रतिपादनमेव सामान्यतया अनुसन्धानस्य अर्थ अस्ति। पाण्डुलिपीनां सम्पादनं तथा कोशग्रन्थसम्बद्धकार्याणि अपि प्रकारान्तरेण उपर्युक्तविधासु समाविष्टानि भवितुम् अर्हन्ति। शोधस्य विषयः उपाधिसापेक्ष उपाधिनिरपेक्षो वा भवेत्, तत्र एको निश्चितः क्रियाविधिरपेक्षितो भवति। कस्मिन्नपि विषयविशेषे शोधस्य कार्यं स्वतः स्फूर्तमपि भवितुमर्हति अन्यप्रेरितमपि। उभयथापि प्रायः शोधकर्त्तुः सामान्यात् विशेषं प्रति, ज्ञाताद् अज्ञातं प्रति, समष्टितः व्यष्टिं प्रति, प्रसृतात् स्रोतसं प्रति, अथवा अपेक्षाकृतसन्धिग्धात् अपेक्षाकृतनिश्चितं प्रति अभिमुखीभवनम् आवश्यकं भवति। केचिद् विशिष्टशोधकर्त्तारः अत्र विषये व्यतिक्रमेणापि गन्तुं प्रभवन्ति। साहित्य-दर्शनादिसंस्कृतवाङ्मये शोधकार्ये प्रवृत्ता अनुसन्धातारः प्रायः पूर्वमार्गस्यैव अनुसरणं कुर्वन्ति। सभ्यमानवस्य अधिकानि कार्याणि प्रायः येन भावनाद्वयेन प्रेरितानि भवन्ति, तत्र प्रथमा भावना भवति-- 'स्वीयसुन्दरसुखदास्तित्वनिर्माणस्य' द्वितीया च 'वर्तमान-भाविजनेषु स्वव्यक्तित्वबोधस्थापनस्य'। निष्कामकर्मयोगेऽपि स्वस्य कृते न स्यात्; परम् अन्येषां कृते तु यत्किमपि उद्देश्यं भवत्येव।

अनुसन्धानकार्याय सर्वस्मादावश्यकस्त्वभिनिवेशः वर्तते। अभिनिवेशं विनानुसन्धानकार्यमसम्भवमेव भवति। प्रायेणैवं दृश्यते यदुत्तमोत्तमा अपि विद्यार्थिनो मनोवृत्तिप्रतिकूलं विषयं गृह्णन्ति। तेषु कतिपय एव ईदृशाः भवन्ति, ये स्वकीयसंयमाध्यवसायादिगुणैः तस्य विषयस्य निर्वाहं कर्तुं प्रभवन्ति, अधिकांशास्तु तं विहाय ततो विरता एव जायन्ते। मनोरुचिप्रतिकूलविषये साभिनिवेशता समुत्पादयितुं न शक्नुवन्ति, तेन, विना चानुसन्धानकार्यं कथं भवेत्? तेभ्यस्तु तत्कार्यं पर्वतभङ्गवत् कठिनं जायते; किन्तु तदेव कार्यं तद्विषये प्राप्तसहजरुचये मनोरमं भवति। अतोऽभिनिवेशः यं विषयं प्रति जागरूको भवेत् वर्तेत वा, स एव अनुसन्धित्सुना ग्रहीतव्यः, निर्देशकेनापि चात्रावधानमवश्यं देयम्। प्रयोजनं विना अभिनिवेशोऽपि न जायते।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषपराः दश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासित-शोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

# धात्वर्थप्रकरणे केषाञ्चित् मतानां विमर्शः

**डॉ. रामसलाहीद्विवेदी**

धात्वर्थविषये भूयांसो विचारा वर्तन्ते, तत्र दार्शनिकानां महती विप्रतिपत्तिर्दृश्यते। व्याकरणे दृष्टिपातं कुर्मस्तदा झटिति कौण्डभट्टस्येयमुक्तिः प्रस्फुरति –

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।**

**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥**[1]

अत्र कारिकायाः प्रथमोऽंशो वाच्यत्वं व्यवस्थापयति, अपरांशः शाब्दबोधं व्यवस्थापयति। अत्र फलव्यापारयोरित्यत्र वाचकत्वरूपविषयत्वं सप्तम्यर्थः। एवम् 'आश्रये' इत्यत्रापि तदेव सप्तम्यर्थः, तथा च विभक्त्यर्थे फलस्याश्रयस्य च निरूपितत्वसम्बन्धेनान्वयः, वाचकत्वस्य च स्वरूपसम्बन्धेन धातौ तिङि चान्वयः। एवम् शाब्दबोधश्च इत्थम् फलति "स्वरूपसम्बन्धावच्छिन्नफलव्यापारोभयत्वा-वच्छिन्नवाच्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नधातुत्वावच्दिन्नवाचकता तद्वान् धातुरिति फलति तथा च स्वरूपसम्बन्धावच्छिन्नाश्रयत्वावच्छिन्नवाच्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नतिङ्त्वावच्छिन्नवाचकता तद्वन्तःतिङः इति।।

तथा च फले इत्यत्र सप्तम्यर्थः निरूपितत्वं, प्रधानपदार्थैकदेशे प्रधानतायामन्वयो नित्यसाकांक्षत्वात् "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति व्युत्पत्तेर्न विरोधः।[2] अतः फलनिरूपितं प्राधान्यं व्यापारे तत्रैव तिङर्थो विशेषणं भवति। तथा च देवदत्तः तण्डुलं पचति इत्यत्र धात्वर्थत्वेन फलव्यापारौ उपस्थितौ, तिङर्थत्वेन कर्तृकर्मसंख्याकालाः, उपस्थितेषु एतेषु अन्वयो यथा व्यापारमुख्यविशेष्यकः शाब्दबोधः, तत्र फलस्यानुकूलत्वसम्बन्धेन व्यापारेऽन्वयः, आख्यातार्थकर्तुः व्यापारे आश्रयत्वसम्बन्धेनान्वयः फलस्य प्राधान्यात् व्यापारे परिच्छिन्नत्वसम्बन्धेनान्वयः कर्मणो निष्ठत्वसम्बन्धेन फलेऽन्वयः प्रथमान्तार्थकर्तुरभेदेन तिङर्थकर्त्तरि अन्वयः तथा च देवदत्ताभिन्नैककर्तृकस्तण्डुल- निष्ठविक्लित्युनुकूलो वर्त्तमानकालिको व्यापार इति शाब्दबोधो जायते। "भावप्रधानमाख्यातम्" इति निरुक्तं व्यापारविशेष्यकबोधे प्रमाणम्। अत्र तिङः कर्तृकत्वे **"कर्त्तरि कृत्"**[3] इत्यस्मात् कर्तरीति अनुवर्तते तथा च **"लः कर्मणि**

---

१ वैयाकरणभूषणसार धात्वर्थनिर्णयः कारिका संख्या-२

२ सविशेषणानां वृत्तिर्न वृत्तस्य च पुनः विशेषनयोगो न। किन्तु ऋद्धस्य राज्ञः पुरुषः इत्यत्रैवास्य न्यायस्यप्रवृत्तिः, देवदत्तस्य गुरुकुलमित्यत्र नित्यसाकाङ्क्षत्वात् उक्तन्यायस्याऽप्रवृत्तिः ज्ञेया।

३ पाणिनीयसूत्रम्-३/४/६७ वृत्तिः-कृत्प्रत्ययः कर्तरि स्यात्।

**च भावे चाकर्मकेभ्यः"**[४] इति सूत्रस्य लकाराः सकर्मकेभ्यः कर्मणि कर्त्तरि अकर्मकेभ्यः भावे कर्तरि स्युः इत्यर्थात्। अत्र वादिनः शङ्कन्ते यथा **"स्त्रियाम्"**[५] इति सूत्रे भावप्रधाानिर्देशमभ्युपगम्य जातिपक्षं वा आदाय कर्त्तरि इत्यस्य कर्तृत्वे कर्मणि इत्यस्य कर्मत्वे तथा च कर्तृत्वं कृतिः कर्म्मत्वं फलम् इत्येव तिङर्थः स्वीक्रियताम् एवं सति कृतां तिङः कृतिरेवार्थः अस्तु इति न च वाच्यम्, कर्त्तरिकृत् इति सूत्रे कर्तृपदम् आश्रयपरं न तु व्यापारपरं "नहि गोधा सर्पन्ती अहिर्भवति" इति न्यायात् कर्तृपदस्य कर्तृत्वपरकत्वानौचित्यात्, अतः "लः कर्मणि च भावे चाऽकर्मकेभ्यः इत्यादौ भावप्रधाननिर्देशोऽनुचित; किञ्च भावनिर्देशाभ्युपगमेन फलव्यापारयोः तिङर्थत्वं नोचितम्, धातुनैव तल्लाभात् "अनन्यलभ्यो हि शब्दार्थ इति न्यायाच्च लः कर्मणि च भावे चाऽकर्मकेभ्यः इति सूत्रबलात् कर्तृकर्मणोः वाच्यत्वस्य लक्षणया आक्षेपात् प्रथमान्तपदाद्वा प्रतीतिः नोपपद्यते। मीमांसकास्तु धातोः फलमर्थः भावना तिङर्थ इति मन्यन्ते अतस्तन्मते अनन्यलभ्यत्वं व्यापारस्य जातम्। अतः तिङः अनन्यलभ्यत्वात् तत्र तिङः शक्तिः अभ्युपगम्यताम् इति न च वाच्यम् एवं सति कर्त्तरि कृत् इत्यस्यापि आश्रयवाचकत्वस्यानुपपत्तिः यदा "कर्त्तरि कृत्" "लःकर्मणि च भावे चाऽकर्मकेभ्यः" इत्यनयोः तुल्ययोगक्षेमता वर्तते।[६]

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।**

**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥**[७]

इति शक्तिग्राहकेषु विवरणमपि शक्तिग्राहकत्वेनोक्तं विवरणञ्च तत्समानार्थकपदान्तरेण तत्कथनमुच्यते पचतीत्यस्य पाकं करोति इति विवरणं भवति तथा च पाकमिति धातोः विवरणं करोति इति 'ति' इत्यस्य विवरणं विवरणसमानार्थकत्वं विव्रियमाणस्य इति न्यायात् विव्रियमाणस्य तिङः क्रियार्थकक्रियाविवरणेन तिङः क्रियावाचकत्वमभ्युपेयं तथा च तिङः भावनारूपोऽर्थः स्वीकार्य्यः इति न वाच्यं "विवरणस्य यदा भवन्मते क्रियाविषयत्वं तथैव करोतीति कर्ता इति रीत्या कर्त्तुरपि तादृशविवरणविषयत्वं न च कर्तुर्विवरणं तात्पर्यार्थविवरणमर्थकर्मत्वविवरणात् अतः विवरणस्य स्वस्वव्युत्पत्त्यनुसारात् शक्तिनिर्णायकत्वानुपपत्तेः तस्मात् "लःकर्मणि इत्याद्यनुरोधेन तिङः कर्तृवाचित्वमवश्यमभ्युपेयम्। किञ्च 'देवदत्तः पचति' इत्यादाविव अभेदान्वयानुरोधेन तिङः कर्तृवाच्यत्वं स्वीक्रियते न च अभेदान्वयबोधे समानविभक्तिकत्वं तन्त्रं तच्च देवदत्तः पचति इत्यत्रासत्त्वात्

---

४ पाणिनीयसूत्रम् - ३/४/६९ वृत्तिः-लकाराः सकर्मकेभ्यः कर्तरिकर्मणि च स्युरकर्मकेभ्यो भावे कर्तरि च

५ पाणिनीयसूत्रम्- ४/१/३

६ अथ दर्शनान्तरीयरीत्या व्यापरस्य धात्वर्थत्वाभावात् तत्र लकारविधिः स्यादिति चेत्? तर्हि कृतामपिकर्तृकम्मादिवाचित्वं न सिध्येत्। "कर्तरि कृत्" इति 'लः कर्मणि' इत्यनेन तुल्ययोगक्षेमम्। वैयाकरणभूषणसारः धात्वर्थ निणर्यः द्वितीयकारिकायाः व्याख्यानावसरे उक्तमस्ति।

७ मुक्तावली शब्दखण्डे

अभेदान्वयबोधानुपपत्तिः इति वाच्यं स्तोकं पचति सोमेन यजेत इत्यादौ समानविभक्तिकत्वाभावेऽपि अभेदान्वयदर्शनात् स्तोकं पचति इत्यत्र स्तोकपदार्थस्य विक्लित्तौ अभेदान्वयदर्शनात् सोमेन यजेत इत्यादौ च मत्वर्थलक्षणया सोमवदभिन्नयागेन इष्टं भावयेत् अभेदान्वय दर्शनाच्चाभेदान्वयबोधे समानविभक्तिकत्वस्या- भेदान्वयबोधाजनकत्वात्।[८] तथा च यत्र-यत्र समानविभक्तिकत्वं तत्र-तत्र अभेदान्वयबोधः इत्येव व्याप्तिः स्वीकार्य्या। अस्यां व्याप्तौ समानविभक्तिकत्वं व्याप्यम्। अभेदान्वयबोधश्च व्यापकः तथा च यत्र-यत्र धूमः तत्र-तत्र वह्निः इत्यत्र धूमस्य अयोगोलकेऽसत्त्वेऽपि व्यापकस्य वह्नेः विद्यमानत्वेन व्याप्तिर्भवति तथैव अभेदान्वयबोधस्य व्यापकत्वेन समानविभक्तिकत्वाभावेऽपि देवदत्तः पचतीत्यादौ अभेदान्वयबोधे बाधकाभावः। न च देवदत्तः पचतीत्यत्र तिङः भावनायां शक्तिः कर्त्तरि लक्षणया अभेदान्वयबोधः इति वाच्यम्[९] "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति वैश्वदेवामिक्षा इत्यादौ द्रव्यवाचित्वानुपपत्तेः, अयमाशयः-अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति[१०] इत्यत्र, आरुण्यस्य अमूर्तत्त्वेन क्रयणकर्म्मत्वानुपपत्त्या स्ववाक्योपात्त आरूण्यान्वयोपपादकस्ववाक्योपात्तद्रव्ये अन्वयोपपादकारुणाधिकरणस्योच्छेदापत्तेः वैश्वदेवी पिङ्गाक्षी[११] इत्यादि यौगिकपदानां **"अनेकमन्यपदार्थे"**[१२], **"सास्य देवता"**[१३] इत्याद्यनुशासनेन प्रधानपष्ठ्यर्थसम्बन्धस्यैव लाभात् अतः लक्षणया कर्तुः उपस्थापनपरः सिद्धान्तोऽनुचितः[१४], तदेवं रीत्या तिङः भावनावाचकत्वं खण्डितं तथा च "भावप्रधानमाख्यातम्" इति निरुक्तात् तिङर्थस्तु इति विशेषणम् 'इत्युक्तत्वात् कर्तृकर्म्मसंख्याकालानां विशेषणता च पूर्वमुक्ता तथा च संख्यान्वयप्रसङ्गे कार्य्यकारणभावः उच्यते, "आख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृ-कर्मान्यतरोपस्थितिः कारणमत्र विषयनिष्ठाप्रत्यासत्तिः नैयायिकास्तु आख्यातार्थसंख्यान्वयं प्रथमान्तार्थे एव स्वीकुर्वाणाः तत्र कार्य्यकारणभावं वदन्ति आख्यातसंख्याप्रकारकबोधं प्रति प्रथमान्तपदजन्योपस्थितिः

---

८ किञ्च पचति देवदत्तः इत्यत्राऽोदान्वयदर्शनात् तदनुरोधेन कर्तुर्वाच्यत्वमावश्यकम्। पक्ता देवदत्तः इतिवत्। न चाऽभेदबोधे समानविभक्तिकत्वं नियामकम्, तच्चात्र, नास्तीति वाच्यम्, सोमेन यजेत, स्तोकं पचति, राजपुरुषः इत्यादावप्यभेद बोधाऽऽनापत्तेः। वैयाकरणभूषणसारः धात्वर्थनिर्णयः द्वितीय कारिकायाः व्याख्यानावसरे।

९ वैयाकरणभूषणसार (पृ. ३५)

१० मीमांसादर्शन अ.-३, पाद-१, अधिकरण-६, सू.-१२

११ तप्तेपयसि दध्यानयति सा वैश्वदेवी आमिक्षा वाजिभ्यो वाजनम्। मीमांसादर्शन अ.-४, पाद-१, सू.-२२-२४ नवमाधिकरणम्।

१२ पाणिनि सूत्र-२/२/२४, वृत्तिः - अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा समस्यते स बहुव्रीहिः।

१३ पाणिनीयसूत्रम्-४/२/२४ इन्द्रो देवतास्येति ऐन्द्रं हविः।

१४ न च लक्षणया कर्तुरुक्तत्वात् सामानाधिकरण्यम्, पिङ्गाक्ष्यादि यौगिकानामपि। अनेकमन्यपदार्थे सास्यदेवता इत्यनुशासनेन 'पिङ्गे अक्षिणीयस्याः' 'विश्वे देवा देवता अस्याः' इति विग्रह दर्शनात् प्रधानवषष्ठ्यर्थे एवानुशासनलाभात् तथा च अरुणया पिङाक्ष्यैक हायन्या सोमं क्रीणाति इति वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्ये एवान्वय प्रतिपादकाऽरुणाधिकरणोच्छेदाऽऽपत्तिः। द्रव्यवाचकत्वसाधकमूलयुक्तेः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण वैयाकरणभूषणे। वैयाकरणभूषणसारः धात्वर्थनिर्णयः द्वितीयकारिकायाः व्याख्यामुक्तमेव।

कारणम् इति तेषामिदं मतं न समीचीनम् चन्द्र इव मुखं दृश्यते देवदत्तो भुक्त्वा पचति इत्यादौ संख्याया: विवक्षितान्वयानुपपत्ते: तथाहि चन्द्र इव मुखं दृश्यते अत्र प्रथमान्तं द्वयं चन्द्रेति मुखमिति तथा च संख्याया: मुखान्वयवत् चन्द्रान्वयोऽपि स्यात् तथा सति चन्द्रेव मुखे दृश्येते इति भवत्कार्यकारणभावस्वीकाररीत्या यथा संख्याया: मुख्यान्वयस्तथा चन्द्रेऽपि अन्वयापत्ति: तथा सति चन्द्र इव मुखे दृश्यते इत्यत्र द्विवचनानुपपत्ति: एवमेव देवदत्तो भुक्त्वा व्रजति[१५] इत्यत्रापि प्रथमान्तद्वयं वर्तते देवदत्तेति भुक्त्वेति तत्र भुक्त्वेति प्रथमान्तार्थे संख्यान्वयापत्ति: स्यात् तस्मात् भवदुक्त: कार्य्यकारणभाव: अनुत्पन्न: यदि भवता उक्तकार्य्यकारणभावस्य आख्यातार्थसंख्याप्रकारकबोधं प्रति इतराविशेषणदानप्रयोजनगौरवं स्यात् किञ्च समानाविधानश्रुतिविरोधोऽपि स्यात् एवं रीत्या भवन्मते दोषद्वयसत्वात् अतएव भूषणकारेणोक्तम् इतराविशेषणत्वमतिगौरवमत: सिद्धान्तया तिङर्थो विशेषणं भावनैव प्रधानम् इत्यास्थेयम् तदैव भावप्रधानमाख्यातमिति निरुक्तस्य भूवादिसूत्रभाष्यस्य च सङ्गति: भूवादिसूत्रस्थभाष्यकारस्तु केयं वाचो युक्ति: सेयं वाचो युक्ति: भवत्यादिपच्यादिक्रियाया: कर्त्र्यो: भवन्ति। पचति भवतीत्यस्य पचति क्रियाकर्तृक भवति क्रिया पक्ष्यति भवतीत्यत्र भविष्यति कालिक पाकक्रियाकर्तृक भवति क्रिया अत्र सत्कार्यवादसिद्धान्तात् पाकस्य भविष्यत्वेऽपि भवतिक्रियायामन्वयोपपत्ति: त्वं पचसि भवसि इत्यस्य युष्मद्कर्तृकपाककर्तृकभवतिक्रिया इत्यादीनि उदाहरणादीनि भाष्योक्तानि क्रियाया: प्राधान्ये एव उपपद्यन्ते तिङर्थस्य प्राधान्ये पचिक्रियाया: भवतिक्रियाया: कर्त्र्यो भवन्ति इत्यादिभाष्योक्तमसङ्गतम् स्यात्। किञ्च प्रथमान्तस्य प्राधान्ये पश्य मृगो धावति इत्यत्र एकवाक्यत्वं न स्यात्।[१६] अस्मिन् वाक्ये प्रथमान्तद्वयं वर्तते मृग इति अध्याहारात् त्वमिति लभ्यते त्वद्रीत्या धावनाश्रयो मृग दर्शनाश्रयस्त्वमिति बोधे वाक्यभेद: स्यात् भावनाया: प्राधान्ये मृगकर्तृकोत्कटधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकदर्शनमित्यादि एकवाक्यत्वोपपत्ति:। न च धावति इत्यस्य कर्मत्वेन **"कर्मणि द्वितीया"**[१७] इति द्वितीयाप्रसङ्ग:, अप्रातिपदिकत्वात् "ननु अर्थैक्यात् एवं वाक्यं साकाङ्क्षं चेत् विभागे स्यात्" इति जैमिनिसूत्रात् विच्छिद्य पाठे साकाङ्क्षत्वे सति एकार्थप्रतिपत्तिजनकत्वम् एकवाक्यत्वमिति अर्थो लभ्यते प्रकृते तमिति उक्ते कमिति आकाङ्क्षासत्वात् यथा कथञ्चित् वाक्यद्वयस्य भावनानुकूल कृतिमान्मृग कर्मकदर्शनरूपैकार्थप्रतिपादकत्वाच्च पश्य मृगो धावति मृगो पश्य इति कर्मपदाध्याहारेऽपि एकवाक्यत्वं संभवति न वाक्यभेद इति शङ्कायामुच्यते उत्कटधावना

---

१५ चन्द्र इव मुखं दृश्यते देवदत्तो भुक्त्वा व्रजति इत्यादौ चन्द्रवाक्यार्थयोराख्यातार्थाऽनन्वयाद् इतराऽविशेषणत्वघटित इत्यतिगौरवम्। वै. भू. सा. धात्वर्थनिर्णय: कारिकासंख्या-२, तस्या व्याख्यानावसरे एवं लिखितमस्ति।

१६ अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभि: समम् अभेदान्वयात् प्रथमान्तस्य प्राधान्यापत्ति:। तथा च "पश्य मृगो धावति" इत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्। प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वाऽऽपत्तौ द्वतीयाऽपत्ते:। न चैवम् अप्रथमासामानाधिकरण्यात् शतृप्रसङ्ग:, एवमपि द्वितीयाया दुर्वारत्वेन पश्यमृग: त्यादिवाक्यस्यैवासम्भवापत्ते: वै. भू. सा. धा. नि. का.सं.-२, तस्या व्याख्यायामेवमुक्तमस्ति।

१७ पा. सू.-२/३/२ वृति: - अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति।

विशेषस्यैव दर्शन कर्म्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वात् अध्याहारे धावनस्य अनन्वयोपत्तेः एवञ्च भाष्याभिमतैकवाक्यत्वासिद्धः, अतः भावनाप्रकारबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम्। किन्तु आख्यातार्थकर्तृकप्रकारकबोधे धातुजन्योपस्थितिः भावनात्वावच्छिन्न विषयतया कारणमिति कार्य्यकारणभावः स्वीकार्य्यः फलेव्यभिचारवारणायाह-भावनात्वावच्छिन्नेति भावनाप्रकरकबोधं प्रति कृज्जन्योपस्थितिवत् धात्वर्थ भावनोपस्थितिरपि हेतुः पश्य मृगो धावति पचति भवति इत्याद्यनुरोधात् इत्थं च पचतीत्यत्र एकाश्रयिका पाकानुकूला भावना कर्मवाच्यत्वे पच्यते इत्यत्र एकाश्रया या विक्लित्तिः तदनुकूला या भावना इति बोधः।[१८] घटो नश्यति इत्यत्र घटाभिन्नाश्रयको नाशानुकूलो व्यापारः इति बोधः स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानं तत्र नाश सामग्री मूसलादि संयोगरूपायाः दण्डादिनिष्ठत्वेन घटो नश्यति इत्यत्र दण्डो नश्यति इति प्रयोगवारणाय प्रतियोगिविशिष्टेति निवेशः तथा सति घटो नश्यति इत्यत्र घटस्यैव नाशप्रतियोगित्वेन दण्डः नश्यति इत्यस्य प्रयोगासंभवात् अत एव तस्यां सामग्र्यां सत्यां नश्यति तदत्यये नष्टः तद्भावित्वे नक्ष्यति इति प्रयोगः।[१९]

देवदत्तो जानाति इच्छति इत्यादौ देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलोव्यापारः स चान्ततः आश्रयतयैवेति बोध्यम्, आश्रयता च अखण्डधर्मरूपा तत्र क्रमिकत्वाभावेऽपि क्रमिकत्वारोपः, वस्तुतः आत्ममनः संयोग एव व्यापारः तदनुसन्धानाभावे तु मूले आह-आश्रयतयैवे ति, आश्रये तु तिङः स्मृताः इत्युक्तत्वात् आख्यातस्य कर्तृकर्मशक्तत्वेऽपि पचतीत्यादौ कर्तृकर्मोभयबोधापत्तिः इत्याशंकायामाह –

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम्।।**[२०]

अयमाशयः-तङादयः फले आश्रयान्वयं द्योतयन्ति फलान्वयी आश्रयस्य कर्मत्वात् तद्द्योतकाः कर्मद्योतकाः व्यापारान्वयी या आश्रयस्य कर्तृत्वात् तद्द्योतकाःकर्तृद्योतकाः इति समुदायार्थः द्योतयन्ती इत्यस्य तात्पर्य्यं ग्राहयन्तीति तात्पर्य्यं तिङ्पदं कर्तृत्वावच्छिन्न विषयकबोधजनकं भवतु इति कर्मत्वावच्छिन्नविषयक बोधजनकं भवति इत्याकारकमिच्छाविशेषरूपं न च पचतीत्यत्र कर्मत्वावच्छिन्नं बोधयति इति तात्पर्यस्यापि सत्वे तिपा कर्मणोऽपि बोधापत्तिः स्यात् इति वाच्यं तात्पर्य्य पदेन अत्र अनादितात्पर्यस्यैव ग्रहणात् तथा च तात्पर्य्यग्राहकं इत्यस्य अनादितात्पर्यग्राहकमित्यर्थः। ननु उक्त

---

१८ इत्थञ्च पचतीत्यत्र एकाश्रयिका पाकानुकूला भावना। पच्यते इत्यत्र एकाश्रयिका या विक्लितिस्तदनुकूला भावनेति बोधः। देवदत्तादिपदप्रयोगे तु आख्यातार्थकर्त्रादिभिस्तदर्थस्यऽभेदान्वयः। वै.भू.सा.धा.नि. का. सं.-२, तस्याः व्याख्यायाम्।

१९ घटो नश्यति इत्यत्रापि घटाऽभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः। स च व्यापारः प्रतियोगित्वविशिष्टनाश-सामग्रीसमवधानम् अत एव तस्यां सत्यां नश्यति तदत्यये नष्ट तद्भावित्वे नङ्क्ष्यति इति प्रयोगः। वै.भू.सा. धा.नि. का. सं.-२, तस्याः व्याख्यायाम्।

२० वै.भू.सा.धा.नि. का. सं.-३

तात्पर्यग्राहकत्वस्यस्वीकारे "क्रमादमुं नारद इत्यबोधि स:"[२१] इत्यादौ पच्यते ओदन: स्वयमेव इत्यादौ व्यभिचार: कर्मण: कर्तृत्वविवक्षायां कर्तरि लकारे सति कर्मवत् कर्मणा तुल्यक्रिय:[२२] इत्यतिदेशेन जगात्मने पदचिण् चिण्वदमिटां अतिदेशात् जगादिसत्वेऽपि कर्तु: एव बोधात् व्यापारे एव अन्वयाच्च अबोधि बुध्यते कर्तरिलुङ् तत्र "दीपजन"[२३] इत्यादि सूत्रेण चिण् तस्य "चिणो लुक्"[२४] इति लुक् इत्यादि तात्पर्यग्राहकस्य सत्वात् अत्रोच्यते -

**उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्ययात्।**
**तस्मात् यथोचितं ज्ञेयं द्योतकत्वं यथागमम्॥**[२५]

कर्मकर्तृविषयादौ इत्यस्य पच्यते ओदनं स्वयमेव इति ग्राह्यमत्र एकौदना भिन्नाश्रयक: पाकानुकूलो व्यापार: इति बोध: आदिपदेन क्रमादमुं इत्याह अत्र एक नारंदविषयकज्ञानानुकूल: कृष्णाभिन्नाश्रयक: अतीतो वा व्यापार: इति तस्मात् तात्पर्यग्राहकत्वविषये उच्यते यथोचितं तात्पर्यग्राहकमौचित्यं च सकर्मकधातु समभिव्याहृतभावसाधारणविधिविधेयचिण्यगादिकर्मद्योतकमिति।

---

२१ शिशुपालवधम् प्रथमसर्ग: श्लो.सं.-३

२२ पा. सू.-३/१/८७, वृत्ति: कर्मस्थया क्रियया तुल्यक्रिय: कर्ता कर्मवत् स्यात्।

२३ पा. सू.-३/१/६८, वृत्ति: एभ्यश्चिलेश्चिण्वा स्यादेकवचने तशब्दे परे।

२४ पा. सू.-६/४/१०४, वृत्ति: चिण: परस्य तशब्दस्य लुक् स्यात्।

२५ वैयाकरणभूषणसार धात्वर्थनिर्णय: का. सं. - ४

# साहित्यशास्त्रे अलङ्काराणां काव्यात्मत्वम्

**डॉ. सुमनकुमारझाः**

जगत्यस्मिन् बहुधा विपरिवर्तमानायां कालकलायामस्याः काव्यकलाया अपि वैशिष्ट्यं प्रतिपादनाय, गुणावगुणयोः समीक्षणाय, मूल्याङ्कनाय चानेके विमर्शकाः काव्यरसास्वादनपटीयांसश्चक्षुरुन्मीलनसमर्थं काव्यशास्त्रमवतारयामासुः। तदेव शाखोपशाखतया परिवर्धितं क्रमशः अलङ्कारशास्त्रम्, सौन्दर्यशास्त्रम्, साहित्यशास्त्रम्, साहित्यदर्शनम्, रसशास्त्रम्, क्रियाकल्पः, काव्यशास्त्रम्, इत्यादिभिः शब्दैः व्यवह्रियते। मन्ये- इदमेव **'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्'** इत्यादिषु निर्दिष्टमिति। नियमश्चायं कश्चन् यत् लोकेऽस्मिन् प्रयोजनायोपकल्पितः सर्वोऽपि विषयः तदनुबन्धिशासनकरं शास्त्रमेकमपेक्षत एवेति। यदुक्तम्-

**अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।**
**सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः॥**[१] इति।

एवमालोच्यैव परिकल्पितमिदञ्च शास्त्रमुत्तरोत्तरमन्तस्तलस्पर्शिनां विदुषां गभीरतरैः विचारैः मार्मिकतायाः सीमानमेवाधिगतं सत् विश्वजनीनं, कविकर्मणः काव्यसाम्राज्यस्यानुशासकं सर्वशास्त्रसाररूपं समपद्यते। यत्र हि परीक्ष्यमाणे कविकर्मणि सर्वाअपि विद्याः काव्याङ्गतया परिगृह्यन्ते। यथा चोक्तं भामहेन-

**न स शब्दो न तद्वाच्यं न सा विद्या न सा कला।**
**जायते यन्न काव्याङ्गमहो! भारो महान् कवेः॥**[२]

वस्तुतो भामहाचार्यस्य कथनमिदं सर्वथा सत्यं प्रतिभाति। साहित्यमपि युगधर्ममाश्रयति,अतएव साहित्यं समाजस्य प्रतिबिम्बमिति कथ्यते। संस्कृतसाहित्यं सर्वदा किमपि नूतनं वर्ण्यवस्तु उररीकृत्य तदाधारेण तात्कालिकसमाजस्वरूपं प्रस्तोति। तत्र हि अस्मदधिगतैरेव शब्दार्थैः अपूर्वां दृष्टिमुन्मीलयितुं कवयः काव्यरचनां कुर्वन्ति इत्यपि महञ्चातुर्यमेषाम्। यथोक्तं शिवलीलार्णवमहाकाव्ये नीलकण्ठदीक्षितमहोदयेन-

---

१ हितोपदेशः श्लोक-सं-१०

२ काव्यालङ्कारः-५-४।

**यानेव शब्दान् वयमालपामः यानेव चार्थान् वयमुल्लिखामः।**
**तैरेव विन्यासविशेषभव्यैः संमोह्यन्ते कवयो जगन्ति।।**[३]

इदमेव काव्यशास्त्रं क्रमशः स्वरूपानुरूपेण साहित्यशब्देन प्रथितम्। सहितस्य भावः खलु साहित्यम्। सहभावश्च अष्टादशविद्याभिः चतुष्षष्टिकलाभिश्च। एवं हि युक्तमत्र साहित्यपदाभिध ानमिति मन्यामहे। यथा च वदति आचार्यराजशेखरः-

**पञ्चमी साहित्यविद्येति यायावरीयः।**
**सा हि चतसृणामपि विद्यानां निष्यन्दः।**[४]

शब्दार्थयोः कीदृशं साहित्यमभीष्टमस्ति, एतदित्थं प्रतिपादयति आचार्यकुन्तकः-

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।**
**अन्यूनातिरिक्तत्वं मनोहारिण्यवस्थितिः।।**[५]

अर्थात् यत्र शब्दनिष्ठसौन्दर्यम् अर्थनिष्ठसौन्दर्यञ्च तुल्यकक्षं भवति तत्र साहित्यं भवति सुप्रतिष्ठितम्। **''साहित्य म्गपेजे पद a composition where the beauty of word and the beauty of meaning are totally balanced just like a complete consort dancing together''**[६]

लौकिकालौकिकभाषासम्पदधिगमाय नामव्याकरणं यथा शब्दानुशासनम्, तथैव लौकिकलोकातीतसुन्दरतरभावसम्पदधिगमायेदं साहित्यशास्त्रमपि रूपव्याकरणं काव्यानुशासनं नाम। भावरागतालविज्ञानपरिगर्भितं सङ्गीतशास्त्रमिव भारतीयरसालङ्काररीतिध्वनिवक्रोक्त्यौचित्यतत्त्वविज्ञान. परिगर्भितमिदं साहित्यशास्त्रमपि भरतोपज्ञमेव प्रवृत्तम्। शास्त्रस्यास्योपयोपयोगित्वं प्रतिपादयन् कथयति आचार्यदण्डी-

**गुणदोषानशास्त्रज्ञाः कथं विभजते जनः।**
**किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु।।**[७]

काव्यशास्त्राध्येतृणामनुसन्धानविषयोऽयं यद् काव्यात्मतत्त्वं किम्? किञ्च काव्यस्य सर्वप्रध ानतत्त्वम्? यद्विना काव्ये सौन्दर्यस्यागमनं न जायते। यथा शरीरे आत्मतत्त्वमेव मुख्यतमं, येन विना शरीरं क्रियाविरहितं, निश्चेतनमस्तित्वशून्यञ्च जायते, अथ च वपुषः सकलमाकर्षणमात्मतत्त्वेनैव सम्भवति, तथैव काव्येष्वपि किञ्चित्तथाविधं तत्त्वं नियतमात्मस्थानीयं, सर्वप्रधानञ्च विद्यते। यथा दर्शनशास्त्रे हि

३ शिवलीलार्णवमहाकाव्यम्-१/१३

४ काव्यमीमांसा-२

५ वक्रोक्तिजीवितम्-१/१७

६ An aesthetic experience according to Abhinavgupta- By R.Gnoli.

७ काव्यादर्शः-१/८

आत्मतत्त्वान्वेषणं तदनुभवश्च परमोध्येयोऽध्येतृणां, तेनैव च मोक्षाधिगमः सम्भवस्तथैव साहित्यशास्त्रेऽपि काव्यात्मतत्त्वान्वेषणं तदनुभवश्च परमोध्येयः सहृदयसामाजिकानाम्। तेनैव आनन्दानुभूतिर्जायते। भरतमनु काव्यशास्त्रस्येतिहासेऽनेकैराचार्यैरनुसन्धानं विहितं यद् काव्येषु किञ्चिदीदृशं तत्त्वं मूलभूतं विद्यते यत्प्रति सहृदयजनैराकर्षणमनुभूयते, काव्यानन्दश्चाऽऽस्वाद्यते। येनाचार्येण यत्काव्याङ्गं प्रति तथाभूतमाकर्षणमनुभूतं तेन तदैव काव्यस्यात्मतत्त्वरूपेण प्रतिष्ठापितम्। अनेनैव हेतुना काव्यशास्त्रस्येतिहासे विभिन्नसिद्धान्तानां सम्प्रदायानां वा आविर्भावो बभूव। केचनाऽऽचार्याः रसमपरेऽलङ्कारमन्ये रीतिं परे वक्रोक्तिमितरे ह्यौचित्यमन्ये ध्वनिं केचन चमत्कारतत्त्वञ्च काव्यात्मानं प्राहुः।

**'गुणं रीतिं रसं वृत्तिं पाकं शय्यामलंकृतिम्।**
**सप्तैतानि चमत्कारकारणं ब्रुवते बुधाः॥'**[८]

वस्तुतः काव्यात्मप्रतिपादनविषये समप्रदायपदप्रयोगो नातिसमुचितः, अपितु पक्षपदप्रयोग एव समुचिततरः। अलङ्कारसर्वस्वटीकाकारेण समुद्रबन्धेन पक्षपदप्रयोग एव विहितः। काव्यात्मतत्त्वानुसन्धानाय विभिन्नकालेषु नव-नवसिद्धान्तानामाविर्भावः कथं सञ्जातः, कश्चाधारस्तत्र गृहीत इत्यस्य विश्लेषणमपि समुद्रबन्धेन विस्तरेण कृतम्। यथा च

**''इह विशिष्टौ शब्दार्थौ काव्यम्। तयोश्च वैशिष्ट्यं धर्ममुखेन, व्यापारमुखेन, व्यङ्ग्यमुखेन चेति त्रयः पक्षाः। आद्येऽप्यलङ्कारतो गुणतो वेति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगकर्तृत्त्वेन चेति द्वैविध्यमिति पञ्चसु पक्षेषु प्रथम उद्भटादिभिरङ्गीकृतो, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चमश्चाऽऽनन्दवर्धनेन।''** [९]

अभिप्रायश्चात्राऽयमेव यद् विशिष्टौ शब्दार्थाविव काव्यम्, तयोश्च वैशिष्ट्यं त्रिविधं सम्भवति। धर्मेण, व्यापारेण, व्यङ्ग्येन चेति। इत्थं पञ्च पक्षाः विद्यन्ते- अलंकारपक्षः, गुणपक्षः, वक्रोक्तिपक्षः, भोजकत्वपक्षः, व्यङ्ग्यपक्षश्चेति।

मयाऽत्रालङ्कारपक्षमाश्रित्यैव विचारः प्रस्तूयते। काव्यसमालोचनाविधायिनी गुणावगुणपरीक्षाकारिणी च विद्या प्रथमं तावदलङ्कारशास्त्रनाम्ना विद्वद्‌दिरभिहिता। प्राचीनकाले विद्याया अस्याः नामेदमतिलोकप्रियं प्रचलितञ्चासीत्। प्राचीनाचार्याः भामहदण्डीवामनउद्भटरुद्रटादयो काव्येष्वलङ्काराणां सर्वतोभावेन महत्त्वं प्रतिपादितवन्तः। एतदर्थमेते मनीषिणः स्वरवितकाव्यशास्त्रीयग्रन्थानां नामस्वलंकारपदप्रयोगं कृतवन्तः। यथा- काव्यालङ्कारः, काव्यादर्शः, काव्यालङ्कारसूत्राणि, काव्यालङ्कारसारसंग्रहः,काव्यालंकारः इति। काव्यसमालोचनायाः प्रारम्भिकयुगे काव्यस्य प्रमुखं सौन्दर्याधायकं तत्त्वमलङ्कार एव सम्मतं विद्वद्‌दिः। अतएव काव्यशास्त्रस्य विवेच्यतत्त्वेषु अलङ्कारतत्त्वमतिमहत्वपूर्णमिति। सत्यमपि काव्यं रमणीयं मनोहरं चारुत्वपूर्णं हृद्यञ्च भवेत्, एतदर्थमलङ्कारोऽनिवार्य एव। यथोक्तं भामहाचार्येण- **'न कान्तमपि निर्भूषं विभाति वनिताननम्।'**

८ विश्वेश्वरः, चमत्कारचन्द्रिका-

९ क, अलङ्कारसर्वस्वम्-समुद्रबन्धटीका, प. ३ ख, केशवमिश्रविरचितः अलंकारशेखरः, प्रस्तावनातः, पृ. ३

यद्यपि काव्यसमालोचनायां रसगुणरीतिवृत्तिध्वनिपदशय्याशब्दपाकालङ्कारादीनां सर्वेषां तत्त्वानां सन्निवेशो विद्यते, तथापि **'प्राधान्येन व्यपदेशा भवन्ति'** इति नयेन काव्येषु अलङ्कारतत्त्वस्य प्राधान्यादियं विद्या अलङ्कारशास्त्राभिधानेन प्रथिता बभूव। प्रतापरुद्रयशोभूषणग्रन्थस्य रत्नापणटीकायां तथ्यमिदमित्थं प्रतिपादयति मल्लिनाथसुतः कुमारस्वामी- **'यद्यपि रसालङ्काराद्यनेकविषयमिदं शास्त्रं तथापि छत्रिन्यायेन अलङ्काराशास्त्रमुच्यते।'**[१०]

काव्यालङ्कारसूत्राणीत्यस्य ग्रन्थस्य टीकाकारः गोपेन्द्रत्रिपुरहरभूपालोऽलङ्कारशब्दस्य वैशिष्ट्यमित्थं प्रतिपादयति- **''योऽयमलंकारः काव्यग्रहणहेतुत्वेनोपन्यस्यते, तद्व्युत्पादकत्वाच्छास्त्रमप्यलंकारनाम्ना व्यपदिश्यत इति शास्त्रस्यालङ्कारत्वेन प्रसिद्धिं प्रतिष्ठिता स्यादिति सूचयितुं विन्यासः कृतः-'काव्यं ग्राह्यमलङ्कारात्, सौन्दर्यमलंकारः' इति।''**[११] राजशेखरेणापि अलंकारस्य महिमा वर्णितः यथा- **'उपकारकत्वादलङ्कारः सप्तममङ्गमिति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानात् वेदार्थानवगतिः।'**[१२] भूषणार्थक 'अलम्' पूर्वकात् 'कृ' धातोः 'अलङ्क्रियतेऽनेन' अलङ्करोति' वा इति निर्वचने करणेऽर्थे 'घञ्' प्रत्यये सति अलङ्कारपदं निष्पद्यते। भावे तु 'अलङ्कृतिरलङ्कारः' इति काव्यसौन्दर्यपदवाचकमेव। अस्मिन्नर्थे शब्दोऽयं व्यापकत्वं धारयति। यथोक्तं वामनाचार्येण- **'अलङ्कृतिरलङ्कारः। करणव्युत्पत्त्या पुनरलङ्कारशब्दोऽयमुपमादिषु वर्तते।'** [१३]

यद्यपि वेद-ब्राह्मण-उपनिषद्-निरुक्त-व्याकरणग्रन्थेषु अलंकारनिर्वचनस्य संकेतः प्राप्यते, तथापि तदानीन्तनयुगे कश्चिदलङ्कारशास्त्रीयो ग्रन्थो आसीदिति निश्चितरूपेण कथयितुं न शक्यते। सर्वप्रथमं आचार्यभरतविरचितनाट्यशास्त्रे अलंकारविवेचनं प्राप्यते। तत्र चत्वारोऽलंकाराः निरूपिताः। यथा च-

**उपमारूपकं चैव दीपकं यमकं तथा।**
**अलंकारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः॥**[१४]

परं व्यवस्थितरूपेणालंकाराणां सर्वप्रथमो विवेचकः भामहाचार्य एव। अलङ्कारसिद्धान्तस्यायं प्रथमोऽऽचार्यः। तेन स्पष्टरूपेणालंकारस्य स्वरूपमपि विवेचितम्, अपि च भरतेन प्रतिष्ठापिता रसादयोऽलंकारेषु परिगण्य, रसादीन् रसवदाद्यलंकारनाम्ना स्वीकृताः। काव्यस्य सर्वस्वमलङ्कृतिरित्यङ्गीकरोति आचार्यभामहः। काव्यात्मविषयकः प्रश्नो नासीत् तत्समक्षम् अतस्तेन काव्यात्मविमर्शो न कृतः, किञ्चालङ्काराः काव्यशोभाकरत्वेन काव्यस्य सर्वाधिकं सौन्दर्याधायकं तत्त्वमिति निर्धारितम्। 'शब्दार्थौ सहितौ काव्यमिति' व्याहरता भामहेन काव्येष्वालङ्कारस्यैव प्रामुख्यं प्रदर्श्यते। काव्यशोभाधायकं यत्किमपि वस्तु विद्यते तत्त्वलङ्कृतिरेवेति तस्याभिमतम्। तेनोद्घोषितं यद्-

---

१० प्रतापरुद्रयशोभूषणम्-रत्नापणटीका,पृ. ५
११ काव्यालंकारसूत्राणिकामधेनुटीका,१/१/२
१२ काव्यमीमांसाद्वितीयोऽध्यायः।
१३ काव्यालङ्कारसूत्राणि-१/१/२
१४ नाट्यशास्त्रम्-१७/४३

**रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः।**
**न कान्तमपि निर्भूषं विभाति वनिताननम्।।**

**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।**
**शब्दाभियालङ्कारभेदादिष्टं द्वयं तु नः।।**[१५]

यथा लोके विविधैरलङ्कारैः वनिताननं विभूष्यते, तथैव उपमाद्यलंकारैः काव्यसौन्दर्यं वर्धते। काव्यशोभाधायकाः धर्माः शब्दनिष्ठा अर्थनिष्ठाश्चालंकाररूपेण परिगृह्यन्ते। तत्र शब्दनिष्ठधर्माः शब्दालङ्कारत्वेन, अर्थनिष्ठधर्माश्चार्थालङ्कारत्वेनाङ्गीक्रियन्ते। उभयस्यास्ति काव्यचारुत्वसम्पादने योगः। वस्तुतः शब्दगतसौन्दर्यं शब्दालंकारैः, अर्थगतसौन्दर्यञ्च अर्थालंकारैः निरूप्यते कविभिः। परं काव्यसौन्दर्यं तु द्वयोर्योगेनैव वर्धते। तदुक्तं वक्रोक्तिजीवितकारेण– **'न शब्दस्य रमणीयताविशिष्टस्य केवलस्य काव्यत्वं, नाप्यर्थस्य'इति।**[१६]

भामहेन अलङ्कारशब्देन 'काव्यगतसकलविषयबोधकता' इति स्वीक्रियते। अलंकारा एव काव्ये प्रधानमिति सिद्धान्तितम्। शब्दार्थवक्रतायुतोक्तिरेवालङ्कार इति भामहकृतमलङ्कारलक्षणम्। यथा–

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।**
वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।।[१७]

तेन वक्रोक्त्यभावे अलंकारस्य सत्ता न स्वीक्रियते। यथा च–

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना।।**[१८]

तन्मते इयं वक्रोक्तिः अतिशयोक्तेरभिन्नाऽस्ति। लोकोत्तरत्वादियमतिशयोक्तिरति रमणीया भवति। अथ चालंकारा अनयैव निष्पाद्यन्ते। यथा–

**निमित्ततोवचो यत्तु लोकातिक्रान्तगोचरम्।**
**मन्यन्तेऽतिशयोक्तिं तामलंकारतया यथा।।**[१९]

अलङ्कृतेरपि मूलं स अतिशयोक्तिं मनुते। इत्थं भामहमतेन काव्यस्य सारभूतं तत्त्वमस्ति अलङ्कारः। शब्दार्थशरीरं काव्यं शब्दार्थभूषणेनैव विच्छित्तिविशेषं जनयति। अलङ्कृतिरहितस्य अकाव्यत्वमुदघोषयता तेन रसादीनामपि परिग्रहणं रसवदाद्यलंकारेषु क्रियते।

---

१५ काव्यालङ्कारः–१/१३,१५
१६ वक्रोक्तिजीवितम्–१/७,वृत्तिः
१७ काव्यालङ्कारः–१/३६, ५/६६
१८ काव्यालङ्कारः–२/८५
१९ तत्रैव–२/८

भामहेन प्रवर्तितोऽयमलङ्कारमार्गः उत्तरवर्तिभिरालंकारिकैः परिष्कृतः परिवर्धितश्च। तेषु आचार्येषु दण्डिनः स्थानं महत्त्वपूर्णमस्ति। दण्डिना विरचितः काव्यादर्शः साहित्यशास्त्रपरम्परायां विशिष्टं स्थानं भजते। काव्यमित्थं लक्षयति आचार्यदण्डी–

**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।**[२०]

तेन काव्येषु शोभासम्पादकानामलंकाराणामेव प्राधान्यं समुद्घोषितम्। अनेन न केवलं रसादीनामन्तर्भावो रसवदाद्यलंकारेषु क्रियते, अपितु सन्ध्यङ्गादीनां नाट्यवैशिष्ट्यानामलङ्कारतयैव निबध्यते। तेनोद्घोषितं यद् काव्येषु येन–येन तत्त्वेन सौन्दर्यस्यागमनं, शोभासंवर्धनञ्च जायते, तानि सर्वाणि तत्त्वानि अलङ्कारपदवाचकान्यैव। यथा च–

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति॥**[२१]

काव्येषु रसादयोऽपि अलङ्कारपदवाचका एव, शोभाधायकत्वाद्। अतएव एतेषां ग्रहणं रसवदाद्यलंकारान्तर्गतमेव क्रियते। यथोक्तं दण्डिना–

**प्रेयः प्रियतराख्यानं रसवद् रसपेशलम्।**
**ऊर्जस्विरूढाहङ्कारं युक्तोत्कर्षञ्च तत् त्रयम्॥**[२२]

शोभाधायकत्वादन्येऽपि काव्यगतधर्माः, सन्धिसन्ध्यङ्गवृतिवृत्यङ्गादयोऽपि अलङ्कारत्वेनैव स्वीक्रियन्ते तेन। यथा च–

**यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः॥**[२३]

अनेन निष्पद्यते यत्काव्यस्य जीवातुभूततत्त्वमलङ्कार एवेति तेषां मतम्। परवर्तिकाले आचार्यदण्डिनः प्रभावो भोजराजस्य ग्रन्थे शृङ्गारप्रकाशे परिलक्ष्यते। तत्र भोजराजस्य चिन्तनमपि अलंकारतत्त्वसन्दर्भे तथैवास्ति यथाऽत्र दण्डिना प्रतिपादितम्।[२४]

आचार्यउद्भटः काव्येष्वलंकाराणां प्राधान्यं प्रत्यपादयत्। तेन अलंकारसामान्यस्य लक्षणं न कृतं परं शोभाधायकत्वेनालंकार एव सर्वप्रधानतत्त्वमिति स्वीक्रियते। रसादयस्तेन रसवत्प्रेयऊर्जस्विसमाहितालंकारेषु

---

२० काव्यादर्शः–१/१०
२१ तत्रैव–२/१
२२ तत्रैव–२/२७५
२३ तत्रैव–२/३६७
२४ शृङ्गारप्रकाशः– एकादशप्रकाशः,

अन्तर्भाविताः। समस्तरसप्रपञ्चस्यालंकारेषु नियोजनं, गुणरीतिवृत्यादीनां नोल्लेखः, किञ्चालङ्काराणां सविस्तरं विवेचनमित्यादिभिः तथ्यमिदं सुकरतया अनुमातुं शक्यते यत् ते अलङ्कारवादिनः सन्ति।[२५]

रीतिं काव्यस्यात्मानं प्रतिपादयन्नपि वामनाचार्यः काव्यस्योपादेयतां सौन्दर्यरूपालङ्कारेणैव स्वीचकार। तन्मते काव्यसौन्दर्यमेवालङ्काररूपः। यद्यपि काव्येषु शोभा गुणैरुत्पद्यते, परं तस्या अतिशयत्वमलङ्कारैरेव निष्पद्यते। यथा-

**काव्यं ग्राह्यमलङ्कारात्, सौन्दर्यमलङ्कारः। स दोषगुणालंकारहानादानाभ्याम्।**

काव्यशोभायाः कर्त्तारो धर्माः गुणाः। तदतिशयहेतवस्त्वलङ्काराः।।'[२६]

वस्तुतः काव्यस्योपादेयता अलङ्कारादेव इति वामनस्याभिमतम्। **रुद्रटेनापि** काव्ये अलङ्कारतत्त्वस्य प्राधान्यं स्वीक्रियते। तेन सर्वप्रथममलङ्काराणां वैज्ञानिकवर्गीकरणं कृत्वा, तेषां वैज्ञानिकं वैशिष्ट्यं प्रकाशितम्। तत्रालङ्कारास्तेन चतुर्षु वर्गेषु विभक्ताः-वास्तवौपम्यातिशयश्लेषाः। अत्र वास्तववर्गे त्रयोविंशतिः, औपम्यवर्गे एकविंशतिः, अतिशयवर्गे द्वादश, श्लेषवर्गे चैक एवालङ्कारो गण्यते। एवं तेन सन्तपञ्चाशदलङ्काराः परिगणिताः। [२७]

वक्रोक्तिसिद्धान्तप्रवर्तकेन कुन्तकाचार्येणापि काव्येष्वलंकाराणां महत्त्वं स्वीक्रियते। तेन सालङ्कारोक्तिरेव काव्यमिति प्रतिपादितम्। यथा-

**अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।**
**तदुपायतया तत्त्वं सालङ्कारस्य काव्यता।।**[२८]

अलङ्कृतवचनमेव काव्यत्वं दधाति न तु काव्यस्याऽलङ्कारयोगः। यथा च- **'तत्त्वं सालंकारस्य काव्यता। अयमत्र परमार्थः। सालङ्कारस्य अलङ्कारसहितस्य निरस्तावयवस्य सतः काव्यता कविकर्मत्वम्। तेन अलङ्कृतस्य काव्यत्वमिति स्थितिः। न पुनः काव्यस्याऽलङ्कारयोगः।** [२९]

भोजराजेन काव्यशोभाकरत्वमेवाऽलङ्कारस्य सामान्यलक्षणमिति कथितम्। सर्वेऽप्यलङ्काराः वक्रोक्तिरूपाअनेन हेतुना जायन्ते यतस्तेषु काव्यशोभाकरत्वरूपो गुणो भवति। गुणरसादयोऽपि काव्यशोभाकरत्वेन अलङ्कारा एव। अत्र दण्डीमुपस्थापयति भोजराजः, यथा- **'तत्र काव्यशोभाकरान् धर्मानलङ्कारानित्यनेन श्लेषोपमादिवद् गुणरसभावतदाभासतत्प्रशमानप्युपसंगृह्णाति। तत्र रसादीनां ऊर्जस्विरसवत्प्रेयसामलङ्कारेषूपदेशात्। तद्यथा- 'प्रेयः प्रियतराख्यानमित्यादयः।'** [३०]

---

२५ काव्यालङ्कारसारसंग्रहः-४/१-१०

२६ काव्यालंकारसूत्राणि-१/१/२,३ ३/१/१,२

२७ रुद्रटविरचितः काव्यालङ्कारः-७,८,९,१०

२८ वक्रोक्तिजीवितम्-१/६

२९ वक्रोक्तिजीवितम्-१/६ वृत्तिः।

३० शृङ्गारप्रकाशः-११/पृ०-६२४

भोजराजेन अलङ्कारा: त्रिषु वर्गेषु विभज्यन्ते। वक्रोक्ति:, स्वभावोक्ति:, रसोक्तिश्च। उपमाद्यलङ्काराणां प्राधान्ये वक्रोक्ति:, गुणानां प्राधान्ये स्वभावोक्ति:, रसानाञ्च प्राधान्ये रसोक्तिर्जायते। यथा च- "**त्रिविध : खल्वलङ्कारवर्ग:- वक्रोक्ति: स्वभावोक्ति: रसोक्तिरिति। तत्रोपमाद्यलङ्कारप्राधान्ये वक्रोक्ति:, श्लेषादिगुणप्राधान्ये स्वभावोक्ति: विभावानुभावव्यभिचारिसंयोगात् तु रसनिष्पत्तौ रसोक्तिरिति।**"[३१]

इत्थं परिलक्ष्यते यद् भोजराज: तानि सर्वानि तत्त्वानि अलंकारपदवाचकानि स्वीकोति यै: काव्येषु सौन्दर्यस्याधानं भवति। एवं प्रतिभाति यद् भोजराज: अलंकारसिद्धान्तस्य पोषक एव। पुन: सर्वेषां तत्त्वानां सङ्करत्वमपि अभीष्टमस्ति भोजराजाय। यथा च- 'एवमस्थापिते गुणरसतदाभासभावाना-मलङ्कारत्वे षट्प्रकारोऽलङ्कारसङ्कर: सम्भवति- गुणसङ्कर:, रससङ्कर:, अलङ्कारसङ्कर:, गुणरससङ्कर:, गुणालंकारसङ्कर:, रसालङ्कारसङ्कर:'इति।[३२]

अलङ्कारपक्षे भोजराजस्याभिमतमेतत् तेनोक्तेन काव्यलक्षणेनापि प्रतीयते-

**अदोषं गुणवत्काव्यमलंकारैरलंकृतम्।**
**रसान्वितं कवि: कुर्वन्कीर्तिं प्रीतिं च विन्दति।।**[३३]

**तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम्। प्राच्यानां सर्वेषामाचार्याणां मतमलङ्कारसर्वस्वकारेण रुय्यकेन इत्थं निरूप्यते**- "इह हि तावदामहोदटप्रभृतयश्चिरंतनालंकारकारा: प्रतीयमानार्थं वाच्योपस्कारकतयालंकारपक्षनिक्षिप्तं मन्यन्ते। तथाहि- पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षे-पव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन 'स्वसिद्धये पराक्षेप: परार्थं स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तै:। रुद्रटेन तु भावालङ्कारो द्विधैवोक्त:। रूपकदीपकापह्नुति-तुल्ययोगितादावुपमाद्यलंकारो वाच्योपस्कारकत्वेनोक्त:। उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता। रसवत्प्रेय:प्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्त:। तदित्थं त्रिविधमपि प्रतीयमानमलंकारतया ख्यापितमेव। वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वे ब्रुवता कश्चिद् ध्वनिभेदोऽलंकारतयैवोक्त:। केवलं गुणविशिष्टपदरचनात्मिका रीति: काव्यत्मत्वेनोक्ता। उद्भटादिभिस्तु गुणालंकाराणां प्रायश: साम्यमेव सूचितम्। विषयमात्रेणभेदप्रतिपादनात् संघटनाधर्मत्वेन चेष्टे:।" [३४]

वस्तुत: आनन्दवर्धनात् प्राचीना आचार्या: काव्येषु अलङ्काराणामेव प्राधान्यं स्वीकुर्वन्ति स्म। अलङ्कारादन्य: कश्चन अलङ्कार्योऽस्तीति तै: नोच्यते। यत्र काव्ये रसोऽस्ति स रसवदलङ्कार: इति तेषां मतमासीत्।

---

३१ शृङ्गारप्रकाश:-११/पृ०-६२८
३२ तत्रैव-११/पृ०-६४१
३३ सरस्वतीकण्ठाभरणम्-१/२
३४ अलंकारसर्वस्वम्-पृ०-३,४,५,६,७।

उपर्युक्तविवेचनेन निष्पद्यते यदलङ्कारवादिभिराचार्यैः काव्येषु अलङ्कारस्यैव प्राधान्यं स्वीकृतम्। ते काव्येष्वलङ्कारमेवाङ्गिनं प्रतिपाद्य, तं महत्तमं तत्त्वं प्रत्यपादयन्। भामह-दण्डी-उद्भट-रुद्रट-वामनादयो आचार्याः रसस्य प्राधान्यमुपेक्ष्यालङ्काराणां प्रामुख्यमङ्गीकृतवन्तः। तैरलङ्कारा एव काव्यसर्वस्वमित्यप्युद्घोषितम्। अलङ्कारसिद्धान्तानुसारं काव्यानां संघटकौ शब्दार्थौ स्तः। शब्दार्थयोरग्राम्यत्ववक्रोक्त्यतिशयोक्ति-निर्दोषत्वौचित्यसंयुतं साहित्यं काव्यमित्युच्यते। काव्यशरीरमलङ्कारैः एवालङ्क्रियते। अलंकाराः काव्य सौन्दर्यस्योत्कर्षकाः काव्यशोभादायकधर्माश्च सन्ति, चमत्कृतिञ्चाऽऽदधति। सौन्दर्यचमत्कृतिपूर्णे च काव्ये काव्यत्वं सन्निहितं भवति। सौन्दर्यविहीनं काव्यमकाव्यमेव। तत्र शब्दनिष्ठसौन्दर्यं शब्दालंकारैरर्थनिष्ठसौन्दर्यञ्चार्थालंकारैः समुत्पद्येते। अलंकारजन्यचारुत्वेनैव शब्दार्थयोः साहित्यं काव्यमुच्यते। वनितामुखं सुन्दरमपि भूषणैर्विना यथा न शोभते, तथैव सरसमपि काव्यमलङ्कारविहीनं चारुत्वपूर्णं न प्रतिभाति।

अतः काव्येषु रस-गुण-रीति-ध्वनि-वृत्यादयः सर्वे पदार्था अलंकारपदवाचका एव, काव्यसौन्दर्याधायकत्वात्। एतदर्थमलंकार एव काव्यस्यात्मस्थानीयं तत्त्वमस्ति, काव्यसौन्दर्यसम्पादकत्वादिति अलंकारवादिनां पक्षः।

वस्तुतः तथ्यमिदं समीचीनमेव प्रतिभाति, यतोहि येन-येन तत्त्वेन काव्येषु सौन्दर्यस्यादानं भवति, तानि सर्वाणि यदि अलङ्कारशब्देन परिगण्यन्ते चेत् न काचिद् हानिः। यतोहि अलं शब्देन पर्याप्तिरपि द्योत्यते। यथा च आधुनिकैः रेवाप्रसादद्विवेदिभिः प्रतिपाद्यते स्वीये ग्रन्थे काव्यालङ्कारकारिकायाम्-

**अलंभावो ह्यलंकारः स च सौन्दर्यं तत्कृतोः।**
**विभक्तात्मा विभुर्जीवब्रह्मणोश्चिद्धनो यथा॥**

**अलंकारोऽपि काव्यस्य तथा सौन्दर्यं तत्कृतोः।**
**अभिव्याप्य स्थितस्ताभिर्व्युत्पत्तिभिर्विभुः॥**[३५]

आधुनिकसाहित्यशास्त्रेऽपि नैकाः प्रसिद्धा आचार्याः सन्ति, विराजन्ते च ये काव्येषु अलङ्कारतत्त्वस्य प्राधान्यं स्वीकुर्वन्ति। काव्येषु विच्छित्तिः अलङ्कारपदार्थेनैव समुत्पद्यते इति आधुनिककाव्यशास्त्रिणां द्रढीयसी मान्यता। अत्र विस्तरभयाद् तेषां सर्वेषामाधुनिकानाम् अलङ्कारतत्त्वसम्बन्धिनः विचाराः नोपस्थाप्यन्ते।

इत्थं साहित्यशास्त्रीयसिद्धान्तेषु अलङ्कारसिद्धान्तस्यास्ति महद् वैशिष्ट्यमित्यत्र न कापि विप्रतिपत्तिः। सिद्धान्तेऽस्मिन् अलङ्कारस्य काव्यशोभां प्रति जनकत्वमङ्गीकृत्य, तस्यैव प्राधान्यं प्रतिपादितमस्ति। अलङ्कारपक्षस्याचार्याः अलङ्कृतिरहितं काव्यं चमत्कारहीनमङ्गीकुर्वन्ति स्म। चमत्कृतिरहितस्य अकाव्यत्वमिति भावनया तैः काव्यसर्वस्वमलङ्कारा एवोद्घोषिताः, काव्येष्वलङ्कारा अङ्गित्वेन प्रतिष्ठापिताश्च। इति।

---

३५ काव्यालंकारकारिका-पृ०/५२

# अभिराजराजेन्द्रमिश्रविरचितम् अभिनवपञ्चतन्त्रम् – एकः परिचयः

**डॉ. मिलिन्द एस. जोषी**

**प्रास्ताविकम्**

संस्कृतगद्यस्य परम्परा वैदिकवाङ्मयादागच्छति । यजुर्वेदस्य तैत्तिरीयसंहितायां गद्यस्य प्राचीनतमरूपं प्राप्यते । गद्ये शाखाद्वयं वर्तते – शास्त्रीयं काव्यात्मकं च । शास्त्रीयगद्ये दर्शन– व्याकरणेत्यादिविषयका नैके ग्रन्था रचिताः । काव्यात्मकगद्ये शाखाद्वयं वर्तते – कथा आख्यायिका च। कथासाहित्यस्यानेकासु शाखासु गद्यनिरूपणं काव्यशास्त्रस्याचार्यैः कृतम् । पञ्चतन्त्रमतीवप्राचीनकथासाहित्यमस्ति । ख्रिस्ताब्दात् पञ्चशतकादर्वाचीनकालपर्यन्तं विश्वस्यानेकासु भाषासु पञ्चतन्त्रस्यानुवादो जातः। कथासाहित्ये क्षेमेन्द्रस्य बृहत्कथामञ्जरी, सोमदेवस्य कथासरित्सागरस्तथा बुधस्वामिनो बृहत्कथाश्लोकसंग्रहः – एतेऽतीव प्रसिद्धाः सन्ति ।

पञ्चतन्त्रं कथासाहित्यस्याकरग्रन्थो भाण्डागारश्च । यतस्तस्मिनष्टषष्टिः (६८) कथाः संकलिताः सन्ति । मानवसमाजस्य हृदयस्पर्शि ज्ञानमाश्चर्यं जनयति । विश्वसाहित्ये ये ये प्रशिष्टग्रन्थास्तेषु पञ्चतन्त्रमपि सुसमृद्धम् । पञ्चतन्त्रे मनुष्यस्वभावस्य विविधविशेषतायाः, अनन्तकोणानां, विविधभावच्छायायाः प्रतिबिम्बं दृश्यते । तस्मात् पञ्चतन्त्रं विश्वसाहित्ये सुप्रतिष्ठितो ग्रन्थः । तस्येयं विशेषता यत् स यथार्थतया बोधप्रधानो ग्रन्थः। अस्मिन् ग्रन्थे सर्वाः कथा न केवलं परस्परसंम्बद्धा अपि तु स्वतंत्रा अपि। तस्मिन् निश्चितरूपेण नीतिविषयकज्ञानं प्रकाश्यते, तथा शुभाशुभयोरतिशयता संपूर्णतया दरीदृश्यते । जीवनव्यवहारस्य सूत्रमाख्यायते, तथा च तस्य कदा प्रयोगः कर्तव्य इत्यपि दर्शयति । तस्मात् पञ्चतन्त्रं व्यवहारव्यूहस्यानुपमो ग्रन्थोऽस्ति । अत एव पञ्चतन्त्रेण विश्वसाहित्ये समादरः प्राप्तः। पञ्चतन्त्रस्य साहाय्येन लेखकाः मौलिकानां बालकथानां सर्जने सामर्थ्यं प्राप्नुवन्ति । बालकथाया असीमो भाण्डागारोऽयं तस्मात् वृद्धा बालानां धीवृद्धिहेतवेऽसंख्यातं कथाग्रहणं कुर्वन्ति । भारतदेशस्य बालकानि कथारसपरितृप्तिविहीनानि कदापि न भविष्यन्ति ।

राजकुमारान् नीतिशास्त्रविशारदान् कर्तुं पञ्चतन्त्रस्य रचना जाता । अत्र नीतिशास्त्रं शिक्षयितुं बालकथामाध्यमम्। राजकुमारा अपि 'बालाः' सन्ति । पण्डितविष्णुशर्मा महिलारोप्यनगरस्य राज्ञः पण्डितः । सः त्रीन् राजकुमारान् नीतिशास्त्रविशारदान् कर्तुमाह्वानं स्वीकरोति स च रचितवानिमं ग्रन्थम् । अश्मान इव राजकुमाराः कथं प्रयत्नैर्रत्नानि जायन्ते तदत्र दृश्यते । षण्मासानन्तरं राजकुमारान् नीतिशास्त्रे पारंगतान् करोति ।

पञ्चतन्त्रं बुद्धिप्रकाशको ग्रन्थः । गुणवान् संस्कारी व्यक्तिरपि शुभबुद्धिचातुर्यमपेक्षते । बुद्धिचातुर्यमपि जीवनस्यायामः ।

